यतस्त्वमपि गुह्यकेश्वर ! समेत्य तत्कारिणः,
करोषि परमे¹श्वरान् प्रकटकीकटत्वानपि ॥ १२

[ पं. ] हे गुह्यकेश्वर ! यक्षाधिप ! यतः कारणात् त्वमपि समेत्य आगत्य तत्कारिणो जिनाभिषेककारिणः परमे¹श्वरान् आढ्यान् करोषि। किंभूतान् ? प्रकटं कीकटत्वं दारिद्र्यं येषां ते तथा, तानपि। अतः किम् ? अहो ! इति विस्मये। भगवतः सकलैश्वर्यादि-नायकस्य अभिषेकोत्सवाः विविधविस्मयाभ्युदय-भूति-सद्भाजनं भवन्ति। विविधाश्च ते विस्मयाश्चाश्चर्याणि च- दरिद्रोऽप्याढ्यः, सरुजोऽपि नीरुक्, विपद्गतोऽप्यपगतापदित्येवं विविधत्वं विस्मयानाम्, विविधविस्मयाश्च अभ्युदयाश्च त एव ²भूतयः तासां सद्भाजनं सत्पात्रतां व्रजन्ति। भवभेदिनो भवं भेत्तुं शीलमस्येति विगृह्य णिनि ॥ [ १२ ॥ ]

( ગૂ. અ ) અહો ! ગુહ્યકેશ્વર ! ( યક્ષોના અધિપતિ ! ઉત્તર-દિશાના દિક્પાલ ! ધનદ ! કુબેર ! ) ભગવંત( સકળ ઐશ્વર્યાદિના નાયક )ના અભિષેકના ઉત્સવો વિવિધ વિસ્મયોના ( દરિદ્ર પણ શ્રીમાન્ થાય, રોગી પણ નીરોગી થાય, વિપદ્ પામેલો પણ આપદ્-રહિત થાય-એવા ) અને અભ્યુદય-લક્ષ્મીના સત્પાત્રરૂપ તથા ભવને ભેદનારા થાય છે.

કારણ કે તમે આ પ્રસંગે આવીને તે અભિષેકોત્સવ કરનારાઓને, પ્રકટ દારિદ્ર (દરિદ્રતા) ધારણ કરનારાઓને પણ પરમેશ્વર (પરમ ઐશ્વર્ય ધારણ કરનારા ) કરો છો. ૧૨.

---

१ ता. स्वरान् । २ ता. भूतयः ।

पतत्पदपरिक्रम-क्रम-विघूर्णित-क्ष्माधरं,
　　कटाक्ष-कपिलीभवद्-भुवनभागमीशान ! ते ।
समस्तकरवर्त्तना-वि[1]चलित-ग्रहर्क्ष ! क्षमा-
　　[2]निधेरिह महोत्सवे सकलभावभाक् ताण्डवम् ॥ १३

[ पं. ] हे ईशान ! पूर्वोत्तराधिपते ! ते तव क्षमानिधेः क्षान्तिनिधानस्य भगवतो[3]ऽभिषेकोत्सवे । ताण्डवं समतं संभवति । एतदुक्तं भवति- त्वं नृत्य-व्यसनीति श्रुतिः । अतो जिनाभिषेके समेत्य नृत्यं प्रवर्तय । किंभूतम् ? पतंश्चासौ पदपरिक्रमश्च पद-परिक्रमः विरले. क्रमे रङ्गभूमौ पर्यटनम्, तेन तस्मिन् वा क्रमः, पादविक्षेपः, तेन विघूर्णिता क्षमा पृथ्वी पर्वताश्च यस्मिन् येन वा; अथवा क्ष्माधरा गिरयः । किं च कटाक्षैरक्षि-विक्षेपैरकपिलः कपिलीभवन् भुवनभागो यस्मिन् तत् तथा । कर-वर्त्तनाभिः कर-भ्रमणैः विचलिता विविधं चलिता ग्रहा [4]ऋक्षाणि च यस्मिन् येन वा तत् तथा । सकलान् भावान् शृङ्गार-वीरादीन् भजत इति सकलभावभागिति ॥ [ १३ ॥ ]

( गू. अ. ) હે ઈશાન ! (પૂર્વોત્તર-ઈશાનદિશાના અધિપતિ !) (તમે નૃત્ય-વ્યસની તરીકે પ્રસિદ્ધ હોવાથી) ક્ષમાનિધિ( જિન ભગવાન્ )ના આ જિનાભિષેક-મહોત્સવમાં સકળ ભાવો (શૃંગાર, વીર વગેરે)થી યુક્ત એવું તમારું તાંડવ સંભવે છે ( આવીને નૃત્ય પ્રવર્તાવો ), કે જેમાં પડતાં પગલાંઓવડે તથા પગોનાં સંચાલનોવડે પૃથ્વી અને પર્વતો પણ ડોલવા લાગી જાય

[1] ता. गलितग्रहर्क्षं । २ ता. निधि । ३ ता. तो अ ।

કટાક્ષોવડે ભુવનના ભાગો કપિલ (વિચિત્ર રંગવાળા) થઈ જાય છે, તથા હાથો ચલાવતાં ગ્રહો અને નક્ષત્રો પણ વિચલિત થઈ જાય છે. ૧૩.

[ वसन्ततिलकम् ]

<u>नागाः</u> ! फणा-मणि-मयूख-शिखाऽवबद्ध-
शक्रायुध-प्रकर-विच्छुरितान्तरिक्षम् ।
सद्यः कुरुध्व<u>मभिषेक</u>दिनं समन्ताद्,
भूत्वा भवोद्भवभिदो भुवने प्रदीपाः ॥ १४

[ पं.] हे <u>नागाः</u> ! भवोद्भवभेदिनो भुवने प्रदीपाः समन्ताद् भूत्वा एवम्भूत<u>मभिषेक</u>दिनं कुरुध्वं कुरुत यूयम् । फणासु मणयस्तेषां मयूखाः शिखाः फणा-मणि-मयूख-शिखाभिरवबद्धानि फणा-मणि-मयूख-शिखाऽवबद्धानि तानि च तानि शक्रायुधानि च, तेषां प्रकरैर्विच्छुरितं खचितमन्तरिक्षं गगनं यस्मिन् अभिषेकदिने तत् तथा । भवलक्षणं भवस्योद्भवः प्रादुर्भावः तं भिन्दन्तीति ति[ति] भवोद्भवभित् तस्येति ॥ [ १४ ॥ ]

( ગૂ. અ. ) હે નાગો ! ( અધોદિશાના પાલકો ! પાતાલવાસી દેવો !) તમે ભુવનમાં ચારે બાજૂ પ્રદીપરૂપ થઈને ભવોની ઉત્પત્તિ ભેદનાર( જિન )ના અભિષેક-દિવસને જલદી એવો પ્રકાશવાળો કરો; જેથી આકાશ, ફણાઓ ઉપરના મણિનાં કિરણોની શિખાથી ઝગઝગતું, ઇંદ્રધનુષ્યોથી વિભૂષિત હોય તેવું થાય. ૧૪.

[ वसन्ततिलकम् ]

अथा<u>भिषेक</u>-समये <u>स्मरसूदन</u>स्य,
भक्त्याऽऽनता विकटपञ्चमकल्पतल्पाः ।

शोभां वहन्तु वरतूर्य-पयोद-नादै-
रुत्कम्पिता नलिनयोनि-विमान-हंसाः ॥ १५

[ पं. ] अद्याभिषेकसमये । कस्य ? स्मर-सूदनस्य । नलिनयोनेर्ब्रह्मणो ब्रह्मलोक-पञ्चमलोकाधिपतेर्विमानानि, तेषु हंसाः विमानानां वाहनभूता हंसाः ते शोभां वहन्तु दधतु । भक्त्या आनताः विकटो विस्तीर्णः प्रकटो वा, विकटं परिस्फुटं वा पञ्चमे कल्पे पञ्चमदेवलोके तल्पं शयनीयं येषां ते तथा । अथवा वि(ऽधि)कृतपञ्चमकल्पतल्पाद् भक्त्या आनता इति सम्बन्धः । वराणि यानि तूर्याणि तेषां पयोदानामिव नादैरुत्कम्पितास्त्रस्ता विस्तृतपक्षा हंसाः शोभां बिभ्रतीति भावना ॥ [ १५ ॥ ]

( ગૂ. અ. ) આજે, કામદેવ પર વિજય મેળવનાર( જિન )ના અભિષેક-સમયે, વિશાલ પંચમકલ્પ( બ્રહ્મલોક )માં વસનારા, બ્રહ્મા( બ્રહ્મલોકના અધિપતિ )ના વિમાનોનાં વાહનરૂપ, ભક્તિથી નમ્ર થયેલા અને શ્રેષ્ઠ વાજિંત્રોના મેઘ જેવા નાદો વડે ઉત્કંપિત થયેલા એવા હંસો શોભાને વહન કરો ( વધારો ). ૧૫.

इति दिगधिप-कीर्तनाभिरक्षा-
क्षपित-समस्त-विपक्ष-वीतविघ्न[ः] ।
कुरु सकल-समृद्धि-संनिधानाद्,
विजित-जगन्त्रयमिपेक-मङ्गलानि ॥ १६

[ पं. ] इति समाप्त्यर्थे, एवमर्थे वा । दिगधिपानां कीर्तनमेकैकशो नाम-ग्रहणं तेनाभिरक्षा, तया क्षपिताः समस्तविपक्षा येन स दिगधिप-कीर्तनाभिरक्षा-क्षपित-समस्त-विपक्षः स चासौ

पीतविघ्नश्च विनत-प्रत्यूहश्च स तथाभूतः सन् कुरु। कानि ? अभिषेकमङ्गलानि। किम्भूतानि ? विजितं जगद् विभूत्या यैस्तानि तथा। कुतः ? सकला याः समृद्धयस्तासां सन्निधानाविसर्पैः ॥ [ १६ ॥ ]

इति वादिवेताल-पर्व्वणि द्वितीयं पर्व समाप्तम् ॥ [ २ ॥ ]

( गु. अ. ) [ हे जिनाभिषेक करनार ! ] ए प्रमाणे ( एवी रीते ) दिशाओना अधिपतिओ( दिक्पालो )नां कीर्तन ( प्रत्येकना नाम-ग्रहण ) वडे थयेली अभिरक्षा वडे जेना समस्त विपक्षो (विरुद्ध पक्षवाळा-विरोधीओ) विनष्ट थया छे अने विघ्नो विनाश पाम्यां छे-एवो निर्विपक्ष अने निर्विघ्न थईने तुं सकळ समृद्धिओना सांनिध्यथी, जगत् पर विजय करनारां ( अपावनारां ) एवां अभिषेक-मंगलोने कर. १६.

—ए प्रमाणे वादिवेतालना पर्वमां (जिनाभिषेकमां) बीजुं पर्व समाप्त थयुं. [ २ ]



[ तृतीयं पर्व ]

मुक्तालङ्कार-विकार-सार-सौम्यत्व-कान्ति-कमनीयम् ।
सहज-निजरूप-निर्जित-जगत्त्रयं पातु जिन-बिम्बम् ॥ १

[ पं ] जिन-बिम्बं पातु रक्षतु। किंभूतम् ? मुक्तो योऽलङ्कार एव विकारस्ततः सारा या सौम्यत्वकान्तिस्तया कमनीयं स्पृहणीयम्। सहजं सहजातं सहजम्। सहजमपि किञ्चित् परकृतं भवेदवस्थितं नख-रोमादिवत्, अत आह- निजमात्मीयं यद् रूपं तेन निर्जितं जगत्त्रयं येन तत् तथा ॥ [ १ ॥ ]

ત્રીજું પર્વ

( ગૂ. અ. ) અલંકારરૂપ વિકારોથી રહિત, સારભૂત, સૌમ્યતા કાંતિથી ચાહવા યોગ્ય, સહજ ( સાથે ઉત્પન્ન થયેલ-સ્વાભાવિક ) નિજ રૂપ વડે ત્રણે જગતને જિતનાર એવું જિન-બિંબ રક્ષા કરો. ૧.

[ शार्दूलविक्रीडितम् ]

भव्यानां भवसागर-प्रतरण-द्रोणी प्रसूतिः श्रियाम्,
[१]शश्वत्-सत्फल-कल्पपादपलता निर्वाणरथ्या परा ।
सौरभ्यातिशयादवाप्तमहिमा स्वामिन् ! प्रभावेन ते,
मत्ताशेषमधुव्रता सुमनस्कलिला श्यामाऽपि धूमावली ॥२

[पं.] हे स्वामिन् ! तव प्रभावेन श्यामाऽपि मलिनाऽपि धूमावलिरेवमेवम्भूतेति। भव्यानां यो भव एव सागरस्तस्य यत् प्रतरणं पारगमनं तस्मिन् साध्ये द्रोणी नौः। प्रसूतिरुत्पत्तिस्थानम्, कासाम् ? श्रियाम्। [१]शश्वदनवरतं यानि सत्फलानि, तेषां कल्प-

१ वा. सत्व।

कल्पलता, यथाऽभिप्रेतफलनिष्पादकत्वात्। निर्वाणस्य मोक्षस्य रथ्या मार्गः। परा प्रधाना, अथवा अपरा सम्यक्त्व-ज्ञान-चारित्राद् भावना तु 'धुवो भवेय दव्वप्पणुज्जुत्तो त्ति' वचनादिति। सौरभ्यातिशयादवाप्तः प्राप्तो महिमा महत्त्वं यया सा तथा। 'शाद्युच्चरच्छ्याम्यतरत्वात्' इति हाद्। प्रशान्ति प्रकर्षेण दत्तान्यशेषसुखानि यया सा तथा। सुखेनैवात्तं क्षिप्तं कलिलं पापं यया, अथवा शोभनानि स्वानि इन्द्रियाणि यस्याः, मनः-प्रसादकत्वात्, शोभनं वा खं यस्याः, सौरभ्यापादनात्, सुखस्य हेतुत्वाद् वा सुखम्। प्रदीपार्थं मल्लिका-प्रदीप इति॥ [ २ ॥ ]

( गु. अ. ) हे स्वामी ! श्याम( मलिन ) એવી પણ [ સુગંધી ધૂપની ] ધૂમાવલી, તમારા પ્રભાવથી ભવ્યોને ભવ-સાગરથી તરવામાં નૌકા (હોડી) જેવી છે, લક્ષ્મીઓના ઉત્પત્તિ-સ્થાન જેવી છે, અભીષ્ટ ફળ-નિષ્પાદક હોવાથી તે સદા સત્ફલ આપવામાં કલ્પવૃક્ષની લતા જેવી છે, નિર્વાણના પરમમાર્ગ જેવી છે, સુગંધ-સુવાસના અતિશયથી મહિમા પામેલી છે, સમસ્ત સુખોને આપનારી તથા સુખવડે પાપને નાશ કરનારી છે અથવા મનને પ્રસન્ન કરનાર હોવાથી, સુગંધ ફેલાવનાર હોવાથી, અથવા સુખના હેતુભૂત હોવાથી ઇંદ્રિયોને પણ સુપ્રશસ્ત બનાવનારી છે. ૨.

[ वसन्ततिलका ]

किं लोकनाथ ! भवतोऽतिमहार्घ(र्घे)नैषा ?,
किं वा स्वकार्यकृतनम्रत्वमिदं जनानाम् ? ।
किं वाऽद्भुतः सुमनसां गुण एष कश्चिद्,
उष्णीषदेशमभिरुह्य विभान्ति येन ॥ ३

[ पं. ] निरलङ्कारस्योद्ग्राहितधूपस्य पुष्पारोपणमित्येतदाह– हे लोकनाथ ! किं भवतोऽतिमहार्घ(र्घे)ता महानुभाव¹तैवा ?, किं वा स्वकार्यकुशलत्वं नैपुण्यं जनानामिदम् ? किं वा सुमनसां पुष्पाणाम् एषो²ऽद्भुतो गुणः ? । येनाकृतेनाभिहितवांस्तद्दर्श[य]ति –येन कारणेनोष्णीषदेशमध्यमिरुह्य आरुह्य कुसुमानि भान्ति शोभन्ते । मस्तकमध्योन्नतप्रदेश उष्णीषः, स च महापुरुषाणामेव भवति ॥ [ ३ ॥ ]

( गू. अ. ) ( અલંકાર-રહિત અને ઉખેવેલ ધૂપવાળા જિન-બિંબને પુષ્પ ચડાવવામાં આવે છે; એથી કહે છે કે– ) હે લોક-નાથ ! શું આ આપની અતિમહાર્ઘતા ( મહાનુભાવતા ) છે ?, અથવા શું લોકોનું આ પોતાનું કાર્ય-કુશલપણું છે ?, અથવા શું આ કોઈ પુષ્પોનો ( પોતાનો જ ) અદ્ભુત ગુણ છે ? કે ઉષ્ણીષ ( મસ્તકની મધ્યમાં રહેલો ઉન્નત પ્રદેશ, જે મહાપુરુષોને જ હોય છે ) દેશ પર પણ ચડીને એ કુસુમો શોભે છે. ૩.

[ गाथा ]

आ स्नात्र–परिसमाप्तेरशून्यमुष्णीषदेशमीशस्य ।
सान्तर्द्धानं धा(–नमध्या)रापातं पुष्पोत्तमैः कुर्यात् ॥ ४

[ पं. ] समस्तस्नात्र–विधिमाह– आ स्नात्र–परिसमाप्तेः स्नात्र –परिसमाप्तिं यावत् । ईशस्य भगवतः, अशून्यमविविक्तम् । कम् ? उष्णीषदेशं कुर्याद् विदध्यात् । स्नात्रकर्तुरुपदेशोऽयम् । किंभूतम् ? सहान्तर्द्धानेन वर्तत इति सान्तर्धानमव्यवधानं पुष्पैरच्धारापात उदक–धारानिपातो यस्मिन् उष्णीषदेशे स तथा तमिति । कैर- शून्यम् ? पुष्पोत्तमैरिति ॥ [ ४ ॥ ]

---

१ ता. नैषा । २ ता. षोद्भू ।

शिवाय शिवविस्तरज्जयजय-स्वन-प्रोल्लसत्-
　　पयोज-कल-काहला-कलित-काकली-कोमलैः ।
रटत्पटह-पाटव-प्रकट-झल्लरी-झात्कृ(झात्कृ)तैः,
　　पतत् प्रथममस्तु वो भगवतोऽभिषेकोदकम् । ६

[ पं. ] भगवतोऽभिषेकोदकं प्रथमं पतत् शिवायास्तु । कैः सद्भिः पतद् ? रटंश्चासौ पटहश्च, तस्य पाटवं '[1]श्रीकल्याणादीनामेव गुणानां पश्चिमभावप्रतिषेधो, न पाटवादीनाम्' तेन प्रकटोल्लसितया झल्लर्यातोद्य-विशेषस्य यानि झात्कृ(झात्कृ)तानि तैरिति । यदि वा रटत्पटहेन पाटवं तेन प्रकटाया अथवा रटत्पटहेन पाटवं यस्या इति बहुव्रीहिगर्भः कर्मधारयः । किंभूतैः ? शिवो यः शिवहेतुत्वाद्, विस्तरन् जय-जय-स्वनो जय-जयारवः, प्रोल्लसंश्च यः पयोजः शङ्खः, कला मधुरा या[:] काहलास्ताभिराकलितानि मिश्राणि, काकल्या नरप्रधान-मधुर-गेयध्वनिना कोमलानि यानि झा(झा)त्कृतानि शिवविस्तरज्जयजयस्वन-प्रोल्लसत्पयोज-कलकाहला-कलित-काकली-कोमलानि तैरुपलक्षितम्, हेतुभूतैः सद्भिर्वा पतदुदकमिति सम्बन्धः ॥ [ ६ ॥ ]

( ગૂ. અ. ) શિવ( કલ્યાણ )ના હેતુભૂત હોવાથી શિવ એવા અને વિસ્તાર પામતા 'જય જય' શબ્દો, અને પ્રકૃષ્ટ ઉલ્લસતા શંખ અને કલ ( મધુર ) કાહલા તેનાથી મિશ્ર, તથા કાકલી ( નરપ્રધાન મધુર ગેય-ધ્વનિ )વડે કોમલ, તથા વાગતા પટહોના પટુ શબ્દો અને પ્રકટ જણાતા ઝલ્લરી( ઝાલરો )ના ઝણકારો ( ધ્વનિઓ ) સાથે પ્રથમ પડતું ભગવંતનું અભિષેક-જલ તમારા કલ્યાણ માટે હો. ૬.

---

1 वा. धी ।

मीन-कुरङ्गमदागुरु-सारं, सारसुगन्धि-निशाकर-तारम् ।
तारमिलन्मलयोत्थविकारं, लोकगुरोर्दह धूपमुदारम् ॥ ७

[ पं. ] मीनश्च मत्स्यः, कुरङ्गश्च कालपृष्ठः तयोर्मदो मीन-कुरङ्गमदः कस्तूरिका, तेनागुरुणा च सारं तद्-गर्भं लोकगुरोर्दह धूपमिति सम्बन्धः । सारः प्रधानः सुगन्धिर्यो निशाकरः कर्पूरस्तेन तारमुत्कटं यद्वलं वा । तारः शोभनो मिलन्मलयोत्थविकारश्चन्दन-चूर्णो यस्मिन् स तथा । तं किम्भूतम् ? उदारमुदारद्रव्यैर्निष्पादितत्वात्, क्रियाविशेषणं च ॥ [ ७ ॥ ]

( गु. अ. ) ( અભિષેક કરનારને ઉદ્દેશીને કહે છે- ) મીન અને કુરંગ( મૃગ )ના મદ ( કસ્તૂરી ) અને અગરવડે સારભૂત, ઉત્તમ સુગંધિ કપૂરવડે ઉત્કટ અદ્ભુત સુગંધવાળા, તથા શ્રેષ્ઠ ચંદન-ચૂર્ણવાળા એવા ઉત્કૃષ્ટ દ્રવ્યોવડે તૈયાર કરેલા ઉત્તમ ધૂપને તું લોક-ગુરુ ( જિન ) પાસે બાળ ( ઉખેવ ) ૭.

[ शालिनी ]

सर्व्वौषध्यः सर्व्वतीर्थोदकानि,
प्रायो गव्यं हव्य-दुग्धं दधीति ।
सर्व्वे गन्धाः सर्व्वसौगन्धिकानि,
स्नात्राण्येषामन्तरालेषु धूपः ॥ ८

[ पं. ] विशिष्टसुगन्धिद्रव्य-मेलापकनिष्पाद्याः सर्व्वौषध्यः, सर्व्वाणि तीर्थोदकानि, प्रायो बाहुल्येन गव्यं हव्यं घृतं, दुग्धं क्षीरमनयोः समाहार-द्वन्द्वः । दधि च । सर्व्वे गन्धाः सर्व्वाणि सुगन्धिद्रव्याणि गन्ध-कुसुमादीनि, सर्व्वाणि च सौगन्धिकानि

पुष्पाणि समस्तस्नात्रावसाने उदक-मृतैर्वरपुष्पसम्मिश्रैः कुम्भैरभिषेकः कार्य इति। एतान्येवाभेदोपचारात् स्नात्राणि। एतेषामन्तरेषु धूपो देय इत्युपदेशः ॥ [ ८ ॥ ]

( ગૂ. અ. ) વિશિષ્ટ સુગંધિ દ્રવ્યો મેળવીને બનાવવામાં આવતી સર્વ ઔષધિયો, સર્વ તીર્થોનાં પાણી, પ્રાયે ગાયનું ઘી, દૂધ અને દહિં, સર્વ ગંધો ( સુગંધિ દ્રવ્યો ), સર્વ સુગંધિ પુષ્પો, તથા સમસ્ત સ્નાત્રના અંતમાં શ્રેષ્ઠ પુષ્પોથી મિશ્રિત પાણીથી ભરેલા કુંભો( કળશો )વડે અભિષેક કરવો જોઈએ. એ જ અભેદ-ઉપચારથી સ્નાત્રો છે. એમની વચ્ચે વચ્ચે ધૂપ દેવો જોઈએ ( એ ઉપદેશ છે ). ૮.

[ गाथा ]

पायात् स्निग्धमपीक्षितं, भव-दव-मूलाग्नि-शमन-सामर्थ्यम्।
उपहृतमिवामरेन्द्रैरभिषेकघृतं घृताम्भोधेः ॥ ९

[ पं. ] उदकानन्तरं घृतम्। अभिषेकाय घृतं यदुपहृतमानीतममरेन्द्रैर्घृताम्भोधेरिव[१] घृतसमुद्रादिव तत् पायाद्[२] रक्षतु। स्निग्धमपि[३] सत् ईक्षितं भव-दव-मूलाग्निशमन-सामर्थ्यम्। ईक्षितं दृष्टम्। भव एव दवस्तस्य यो मूलाग्निः कषायरूपः, तस्य शमने तत्र सामर्थ्यं यस्य तत्। तथोक्तम्- 'स्निग्धेनाग्निर्दीप्यते' इति अपिशब्दार्थः। 'स्निग्धं कषायोपशमनाय' इति [४]प्रणालिकया पारम्पर्येण वा कषायोपशमनफलं भगवतः स्नात्रं चोपलभ्य प्राणिनामुपशमो भवति तात्पर्यम् ॥ [ ९ ॥ ]

---

१ ता. धिरिव। २ ता. रक्षतु। ३ ता. सन् ईक्षितं। ४ ता. प्रनालि।

( ગૂ. અ. ) ( પાણી પછી ઘીનો અભિષેક દર્શાવે છે. ) અમરેન્દ્રોએ ઘૃત-સાગરથી આણેલું હોય તેવું ( અભિષેક માટે આણેલું ઘી ) કે જેનું દર્શન પણ સંસારરૂપી દાવાનલના મૂલ અગ્નિ ( કપાયો )ના શમનમાં સામર્થ્ય ધરાવે છે, તે [ સર્વની ] રક્ષા કરો. ૯.

[ गाथा ]

उचितमभिषेककाले, मुनिगात्र-पवित्र-चित्र-चारुफलम् ।
क्षीरं क्षीरोदोदक-लक्ष्मीं लक्ष्मीं दध[द्] दद्यात् ॥ १०

[ पं. ] क्षीरमभिषेककाले उचितं सत् लक्ष्मीं श्रियं दद्यात् पुष्णीयात्, कुर्याद् वाऽनेकार्थत्वाद् धातूनाम्, उपसर्गाणां च द्योतकत्वात् इत्यस्मिन् पक्षे मुनेर्गात्रं तेन पवित्रं, चित्राणि चारूणि फलानि यतस्तत् तथा; मुनिगात्रपवित्रं च चित्रचारुफलं चेति कर्मधारयः । क्षीरोदस्योदकानि, तेषां लक्ष्मीं शोभां दधद् धारयत् ॥ [ १० ॥ ]

( ગૂ અ. ) અભિષેક-સમયે ક્ષીર-સાગરનાં જળની લક્ષ્મી-શોભાને ધારણ કરતું ક્ષીર ( દૂધ ), મુનિ( તીર્થંકર )નાં શરીરવડે પવિત્ર થઈને આશ્ચર્યકારક સુંદર ફળોને આપનાર હોઈ [ સ્નાત્ર કરનારને ] લક્ષ્મી આપો. ૧૦.

[ गाथा ]

[1]माङ्गल्यमिन्दु-कुन्दावदातममरे[2]श्वरोपनीतानाम् ।
दधि दधिजलधि-जलानां, स्मरणाय विविक्तचित्तानाम् ॥११

१ ता. मंग । २ ता. रैस ।

[ पं. ] [1]माङ्गल्यं मङ्गलाय हितम् । इन्दुश्च कुन्दश्च तद्वद् अवदातं शुभ्रं यद् दधि तत् स्मरणार्थम् । केषाम् ? विविक्त-चित्तानाम् अवदातधियाम् । किं स्मर्तव्यमित्याह– दधि-जल[2]धेः दधिसमुद्रस्य यानि जलानि तेषाममरे[3]श्वरैरिन्द्रैरुपनीतानां ढौकितानामिति । कर्मणि षष्ठीति ॥[११॥]

( ગૂ. અ. ) મંગલ માટે હિતકારિ, તથા ચંદ્ર અને કુંદ (પુષ્પ) જેવું ઉજ્જ્વલ દહિં, વિશુદ્ધ ચિત્તવાળા (પવિત્ર બુદ્ધિવાળાઓ)ને ઇંદ્રોએ ઉપસ્થિત કરેલાં દધિસાગરનાં દહિંને સ્મરણ કરાવવા માટે છે. ૧૧

[ गाथा ]

अभिषेक-पयो-धारा, धारेव ध्यान-मण्डलाग्रस्य ।
भव-भवन-भित्तिभागान्, भूयोऽपि भिनत्तु भागवती ॥[4]१२

[ पं. ] अभिषेकाय या पयोधारा सा भव एव भवनं तस्य भित्तिभागान् कर्मसंस्थानीयान् भिनत्तु । भूयोऽपि पुनरपि शिवे-त्यादिना प्रथममभिषेकोदकं शिवाय कथितम्, पुनरेतद् द्वितीय-मिति भावना । कस्येयम् ? भगवत इयं, सोत्प्रेक्ष्यते ध्यान-मण्डलाग्रस्य ध्यानासेर्धारेव ॥[१२॥]

( ગૂ. અ. ) ભગવંતને ફરી પણ કરાતા અભિષેક માટેની આ પયોધારા (જલ-ધારા), ભગવંતના ધ્યાનરૂપી ખડ્ગની ધાર જેવી બની ભવ( સંસાર )રૂપી ભવનની ભીંતોના ભાગોને ભેદો. તાત્પર્ય કે કર્મોનો વિનાશ કરો. ૧૨

१ ता. मंग । २ ता. धि । ३ ता. रेश्व । ४ ता. ११ ।

[ शालिनी ]

नानावर्णैर्वर्णकैर्गन्ध-लुब्ध-
भ्राम्यद्-भृङ्गी-सार्थ-सङ्गीत-रम्यैः ।
घृष्टोन्मृष्टं[1] चारुचीनांशु[2]कान्तैः,
कान्तं पातुः पातु बिम्बं जिनस्य ॥ १३

[ पं. ] जिन-बिम्बं पातु रक्षतु । किम्भूतस्य ? पातुः पालयितुः । किम्भूतम् ? कान्तं कमनीयं, घृष्टोन्मृष्टं पूर्वं घृष्टम् । कैः ? वर्णकैः सर्वौषधीगन्धादिभिः । किम्भूतैः ? नानाप्रकारा वर्णा येषां ते तथा तैः । गन्धेन लुब्धः भ्राम्यन् यो भृङ्गी-सार्थः भृङ्गाङ्गनानां समूहस्तस्य गीतं तेन रम्या ये वर्णकास्ते-रिति पश्चादुन्मृष्टम् । कैः ? चारूणि यानि चीनां[3]शुकानि, तेषां येऽन्तास्तैरिति ॥[१३॥]

( ગુ. અ. ) ગંધમાં આસક્ત થઈને ભમતા ભમરી-સમૂહના સંગીત વડે રમણીય વિવિધ વર્ણોવાળા વર્ણકો ( વિલેપનો-સર્વ ઔષધિગંધો વગેરે )વડે પહેલાં ઘષ્ટ-વિલિપ્ત કરવામાં આવેલ અને પછી ચારુ ( સુંદર-મનોહર ) ચીનાંશુકો ( ઉત્તમ ચીનાઈ વસ્રો )ના છેડાઓવડે ઉન્મૃષ્ટ ( લૂછી નાખવામાં આવેલ ), પાલક એવા જિનનું મનોહર બિંબ રક્ષણ કરો. ૧૩

[ वसन्ततिलकम् ]

मन्दारपुष्प-मकरन्द-हृतालि-वृन्द[4]-
वृन्दारकप्रचय-मेचकितानि लक्ष्म्याः[5] ।

१ ता. मृष्ट चा । २ ता. शुकां । ३ ता शुकानि । ४ ता. वृंदं । ५ ता. लक्ष्माः ।

[ पं. ] [1]माङ्गल्यं मङ्गलाय हितम् । इन्दुश्च कुन्दश्च तद्वद् अवदातं शुभ्रं यद् दधि तत् स्मरणार्थम् । केषाम् ? विविक्तचित्तानाम् अवदातधियाम् । किं स्मर्तव्यमित्याह– दधि–जल[2]धेः दधिसमुद्रस्य यानि जलानि तेषाममरे[3]श्वरैरिन्द्रैरुपनीतानां ढौकितानामिति । कर्मणि षष्ठीति ॥[११॥]

(ગૂ. અ.) મંગલ માટે હિતકારિ, તથા ચંદ્ર અને કુંદ (પુષ્પ) જેવું ઉજ્જ્વલ દહિં, વિશુદ્ધ ચિત્તવાળા (પવિત્ર બુદ્ધિવાળાઓ)ને ઈંદ્રોએ ઉપસ્થિત કરેલાં દધિસાગરનાં દહિંને સ્મરણ કરાવવા માટે છે. ૧૧

[ गाथा ]

अभिषेक–पयो–धारा, धारेव ध्यान–मण्डलाग्रस्य ।
भव–भवन–भित्तिभागान्, भूयोऽपि भिनत्तु भागवती ॥[4]१२

[ पं. ] अभिषेकाय या पयोधारा सा भव एव भवनं तस्य भित्तिभागान् कर्मसंस्थानीयान् भिनत्तु । भूयोऽपि पुनरपि इत्येत्यादिना प्रथममभिषेकोदकं शिवाय कथितम्, पुनरेतद् द्वितीयमिति भावना । कस्येयम् ? भगवत इयं, सोत्प्रेक्ष्यते ध्यान–मण्डलाग्रस्य ध्यानासेर्धारेव ॥[१२॥]

(ગૂ. અ.) ભગવંતને ફરી પણ કરાતા અભિષેક માટેની આ પયોધારા (જલ-ધારા), ભગવંતના ધ્યાનરૂપી ખડ્ગની ધાર જેવી બની ભવ(સંસાર)રૂપી ભવનની ભીંતોના ભાગોને ભેદો. તાત્પર્ય કે કર્મોનો વિનાશ કરો. ૧૨

१ ता. मंग । २ ता. धि । ३ ता. रेश्व । ४ ता. ११ ।

(ગૂ. અ.) [હે ભગવન્ !] હિમાદ્રિ(હિમાલય)નાં શિખરોની મધ્યમાં જેનું સ્થાન છે, એવા પદ્મ-મહાહ્રદમાંથી જેનો જલ-પ્રવાહ ઉત્પન્ન થયેલો છે, જેના ઉંચા તરંગ-ભગો (કલ્લોલો) ઉછળી રહ્યા છે, તે ગંગા આપનો અભિષેક કરો. ૧૫

गगनगामि-गणेश-विलासिनी[1]-
जन-कटाक्ष-वलक्षमहाप्लवा ।
जित-जगत्त्रय ! सिन्धुधुनी ध्रुवा-
ण्युपनयत्वभिषेकजलानि ते ॥ १६

[पं.] हे जितजगत्त्रय ! हिमवत्पर्वतोपरि-ह्रदाभिसृता अपराम्भोधिगामिनी सिन्धुधुनी सिन्ध्वभिधाना नदी सा ते नवाभिषेकजलानि ध्रुवाणि निश्चितान्युपनयतु । सा विशिष्यते–गगनगामि[2]नां विद्याधराणां ये गणास्तेषां य ईशः प्रभुस्तस्य यो विलासिनीजनस्तस्य ये कटाक्षा अपाङ्गनयनप्रेक्षणास्तद्वद् वलक्षो धवलो महाप्लवो महापूरो यस्याः सा तथा ॥[१६॥]

(ગૂ. અ.) ત્રણ જગતને જિતનાર હે જિન ! [હિમવત્-પર્વતના ઉપર રહેલા હ્રદમાંથી નીકળેલી અને પશ્ચિમસમુદ્રમાં જતી] સિંધુ નદી, જેનો મહાપ્રવાહ, વિદ્યાધરગણના સ્વામીની વિલાસિનીઓના (વિલાસ કરનારી વિદ્યાધરીઓના) કટાક્ષ જેવો ધવલ છે, તે તમારાં અભિષેક-જલને લાવો (અહિં ઉપસ્થિત કરો). ૧૬

---

१ ता. ०शिनी । २ ता. नीनां ।

लीलाकटाक्ष-धवलानि जलानि दुग्ध-
सिन्धोः पुनन्तु मुनि-गात्र-पवित्रितानि ॥१४

[पं.] दुग्धसिन्धोः क्षीराम्भोधेः जलानि पुनन्तु पवित्रीकुर्वन्तु। तानि विशिनष्टि- मुनेः भगवतो गात्रं तेन पवित्रितानि। मन्दाराणां यानि पुष्पाणि, तेषां यो मकरन्दो रसस्तेन यान्याहृतानि षट्पदवृन्द-वृन्दारकाणि अलिवृन्दानि च तानि वृन्दारकाणि च शोभनानि, तेषां प्रचयस्तेन मेचकितानि सञ्जातानि येषु। शिखि-कण्ठनिभं मेचकम्। किं च, [१]लक्ष्म्या ये लीलया कटाक्षास्तद्वद् धवलानीति ॥[१४॥]

( गू. अ. ) मंदार( कल्पवृक्ष )नां पुष्पोना मकरंद( रस )थी आकर्षायेल भ्रमर-समूह अने वृंदारकोना ( देवोना ) समूहथी चित्रविचित्र थयेलां, लक्ष्मीना लीला ( क्रीडा )-कटाक्षो जेवां धवल एवां क्षीरसागरनां जळ, मुनि( भगवंत )नां गात्रथी पवित्र ( थयां छतां ) पावन करो. १४

[ उपजातिः ]

हिमाद्रिशृङ्गान्तरसद्म-पद्म-महाह्रदोद्भूत-जलप्रवाहा।
समुद्भवत्-तुङ्ग-तरङ्ग-भङ्गा, करोतु गङ्गा भवतोऽभिषेकम् ॥१५

[पं.] भवतस्तेऽभिषेकं करोतु, हिमवद्[२]गिर्युपरि-पद्मह्रदाद् विनिर्गता पूर्वाम्भोधिगामिनी गङ्गाऽभिधाना नदी। किम्भूता? हिमाद्रेर्यानि [३]शृङ्गाणि, तेषां यदन्तरं तत्र सद्म गृहं स्थानं यस्य स तथा। स चासौ पद्ममहाह्रदश्च तदुद्भूतो जलप्रवाहो यस्याः सा तथा। समुद्भवन्तः तुङ्गा उच्चास्तरङ्ग-भङ्गाः [४]कल्लोल-वलयानि यस्याः सा तथा इति ॥[१५॥]

---

१ ता.लक्ष्मा। २ ता. धनगि। ३ ता. सुंगाणि। ४ ता. सल्लोल।

( ગૂ. અ. ) [ હે ભગવન્ ! ] હિમાદ્રિ( હિમાલય )નાં શિખરોની મધ્યમાં જેનું સ્થાન છે, એવા પદ્મ-મહાહ્રદમાંથી જેનો જલ-પ્રવાહ ઉત્પન્ન થયેલો છે, જેના ઉંચા તરંગ-ભગો ( કલ્લોલો ) ઉછળી રહ્યા છે, તે ગંગા આપનો અભિષેક કરો. ૧૫

गगनगामि-गणेश-विलासिनी¹-
जन-कटाक्ष-वलक्षमहाप्लवा ।
जित-जगत्त्रय ! सिन्धुधुनी ध्रुवा-
ण्युपनयत्वभिषेकजलानि ते ॥ १६

[ पं. ] हे जितजगत्त्रय ! हिमवत्पर्वतोपरि-ह्रदाभिसृता अपराम्भोधिगामिनी सिन्धुधुनी सिन्ध्वभिधाना नदी सा ते तवाभिषेकजलानि ध्रुवाणि निश्चितान्युपनयतु । सा विशिष्यते—गगनगामिनां विद्याधराणां ये गणास्तेषां य ईशः प्रभुस्तस्य यो विलासिनीजनस्तस्य ये कटाक्षा अपाङ्गनयनदर्शनास्तद्वद् वलक्षो धवलो महाप्लवो महापूरो यस्याः सा तथा ॥[१६॥]

( ગૂ. અ. ) ત્રણ જગતને જિતનાર હે જિન ! [ હિમવત્-પર્વતના ઉપર રહેલા હ્રદમાંથી નીકળેલી અને પશ્ચિમસમુદ્રમાં જતી ] સિંધુ નદી, જેનો મહાપ્રવાહ, વિદ્યાધરગણના સ્વામીની વિલાસિનીઓના ( વિલાસ કરનારી વિદ્યાધરીઓના ) કટાક્ષ જેવો ધવલ છે, તે તમારાં અભિષેક-જલને લાવો ( અહિં ઉપસ્થિત કરો ). ૧૬

---

१ वा. ० . वा. नीनां ।

[ शालिनी ]

प्राक्-[1]पाश्चात्याम्भोधि-वेला-तमाला-
नासिञ्चन्त्यौ लोलकल्लोल-पातैः ।
युक्तं कर्तुं लोकनाथाभिषेकं,
प्राप्ते पातां रोहिता-रोहितांशे ॥ १७

[ पं. ] महाहिमवदुपरि-महापद्माभिधानाद् ह्रदाद् विनिर्गता हिमवन्मध्येन पूर्वाम्भोधिगामिनी [2]रोहिता-नामा नदी, तथा हिमवत्-पद्मनिर्गता तेनैवापरसमुद्रयायिनी रोहितांशा[4]ऽभिधाना नदी । एते द्वे अपि रोहिता-रोहि[5]तांशे लोकनाथाभिषेकं कर्तुम् 'आवयोर्युक्तमौपयिकम् एतद्' इत्येवं मत्वा प्राप्ते आगते पातां पालयेताम् । किम्भूते[6] ? प्राक् च [1]पाश्चात्यश्च यावम्भोधी तयोर्वेलायां तमालास्तानासिञ्चन्त्यौ । कैः ? लोलकल्लोला उत्कलिकास्तेषां ये [7]पातास्तैरिति ॥[१७॥]

( गू. अ ) [ महाहिमवत् उपर रहेला महापद्म नामना ह्रदमांथी नीकळेली अने हिमवत्‌नी मध्यमां थई पूर्वसमुद्रमां जती रोहिता नामनी नदी, तथा हिमवतना पद्मह्रदमांथी नीकळेली ते ज मार्गे थइने पश्चिमसमुद्रमां जनारी रोहितांसा( शा ) नामनी नदी ] ए बंने रोहिता अने रोहितांसा(शा) नदीओ, 'आपणु बंनेनुं लोक-नाथ( जिन )ने आ भेटणुं युक्त छे' एवुं विचारीने, चंचळ कल्लोलोना उछाळावडे पूर्वसमुद्र अने पश्चिम-

१ ता. पश्चा । २ ता. तांसे । ३ ता. ताशि । ४ ता. तांशा । ५ ता. तांसे । ६ ता. तां । ७ ता. जाता ।

સમુદ્રના તટ પર રહેલા તમાલ વૃક્ષોને સારી રીતે સિંચન કરતી છતી અત્રી પહોંચી છે, તે બંને [ સર્વની ] રક્ષા કરો. ૧૭

कल्पलता-कलिका-सुरभीणि, क्षान्तिनिधेस्तरसोपनयेताम् ।
सिक्तहरिद्-हरिवर्षवनान्ते, स्नात्रजलानि हरिद्-हरिकान्ते ॥१८

[ पं. ] क्षान्तिनिधेः[1] भगवतः स्नात्रजलानि तरसा वेगेनोपनयेताम् ढौकयेताम । के ? निषधकुलपर्वतोपरि-तिगिच्छि-संज्ञाद् ह्रदाद् विनिर्गता हरिवर्षमध्येन पूर्वाब्धिसर्पिणी हरित्संज्ञा धुनी, तथा महाहिमवद्गिरि-उपरि-महापद्मह्रदोद्भूता तेनैवापरार्णवसंगता हरिकान्ताऽभिधानाऽऽपगा [2]एते द्वे अपि हरिद्-हरिकान्ते । किम्भूते ? सिक्तानि हरिन्ति हरितानि हरिवर्षवनान्तानि याभ्यां ते तथा । कान्युपनयेताम् ? जलानि । किम्भूतानि ? कल्पलतानां याः कलिकाः कुड्मलानि ताभिः सुरभीणि इति ॥[१८]॥

( ગૂ. અ. ) [ નિષધનામના કુલપર્વત ઉપર રહેલ તિગિચ્છિ નામના હ્રદમાંથી નીકળેલી, હરિવર્ષની મધ્યમાં થઈને પૂર્વસમુદ્ર તરફ જતી હરિત્ નામની નદી, તથા મહાહિમવત્-ગિરિ ઉપરના મહાપદ્મનામના હ્રદમાંથી ઉત્પન્ન થઈને તે જ માર્ગે પશ્ચિમ-સમુદ્રને મળતી હરિકાંતા નામની નદી ] હરિત્ અને હરિકાંતા નામની એ બંને નદીઓ, હરિત એવા હરિવર્ષના વનપ્રદેશોને સિંચતી છતી, ક્ષમાનિધિ( ભગવાન )ના સ્નાત્ર માટે કલ્પલતાની કળીઓ વડે સુગંધી એવાં જળને જલ્દી લાવો ( અહિં ઉપસ્થિત કરો. ) ૧૮

१ ता. धिर्मे । २ ता. एते ।

[ गाथा ]

मन्दरकन्दोत्तरकुरु-देवकुरु-विदेह-विजय-विक्रान्तम् ।
[1]शीता-शीतोदोदकमर्हत्स्नात्रोद्यतं पायात् ॥ १९

[ पं. ] [1]शीता च शीतोदा च तयोरुदकं तत् पायात् रक्षतु । किम्भूतम् ? अर्हतो यत् स्नात्रं तस्मिन् उद्यतम् । तद् विशेष्यते- मन्दरो मेरुस्तस्य [2]कन्दोऽधोभागस्तत्र यावुत्तरकुरु-देवकुरू । मेरोरुत्तरभागे नीलकुलपर्वतावच्छिन्न उत्तरकुरुः । दक्षिणभागे निषधकुलपर्वतावच्छिन्नो देवकुरुस्ताभ्यां तयोर्वा विक्रान्तम् । तथा पूर्वविदेहापरविदेहयोर्यानि द्वात्रिंशद् विजयानि तैस्तेषु वा विक्रान्तं गतम्; अथवा मन्दरकन्दः पृथग्भूत एव गृह्यते । एतदुक्तं भवति- नीलोपरि-केसर्याख्यह्रदात् प्रस्थिता मन्दरकन्दोपसरच्छिलातलस्खलनतरङ्गिता उत्तरकुरुमध्येन पूर्वोदधिमनुगता शीताऽभिधाना नदी, तथा निषधोपरि-तिगिञ्छिप्रधानह्रदोत्पन्ना मन्दरकन्दसमीपदक्षिणभागेन देवकुर्वपरविदेह-विजयमध्येन च पश्चिमाम्भोधिगामिनी [1]शीतोदाभिधाना नदी, तयोरुदकं मन्दरकन्दोत्तर-देवकुरुविदेहविजय-विक्रान्तं भवति ॥[१९॥]

(ગૂ. અ.) મંદર( મેરુ )ની નીચે રહેલા ઉત્તરકુરુ અને દેવકુરુ એ [ મેરુના ઉત્તરભાગમાં નીલ નામના કુલપર્વતથી જૂદો પડતો ઉત્તરકુરુ, અને દક્ષિણભાગમાં નિષધ નામના કુલપર્વતથી જૂદો પડતો દેવકુરુ ]; તથા પૂર્વવિદેહ અને પશ્ચિમવિદેહના બત્રીશ

१ ता. शीता सीतो । २ ता. कन्दो अ ।

વિજયો પર વિક્રમ કરતું-જતું, અર્હત્( જિન )ના સ્નાત્ર માટે તત્પર થયેલું શીતા અને શીતોદા નદીઓનું જળ રક્ષા કરો. [મંદર-કંદ જુદો જ લેવાય છે. કહેવાનો એ આશય છે કે-નીલપર્વતના ઉપર રહેલા કેસરી નામના હ્રદથી નીકળેલી અને મંદર-કંદ શીલાથી સ્ખલિત તરંગવાળી, ઉત્તરકુરુની મધ્યમાં થઇને પૂર્વસમુદ્રને અનુસરતી શીતા નામની નદી છે, તથા નિષધપર્વત ઉપરના તિગિંછિ નામના પ્રધાન હ્રદમાંથી ઉત્પન્ન થયેલી, મંદર-કંદ-સમીપ દક્ષિણભાગદ્વારા, દેવકુરુ અને પશ્ચિમવિદેહ વિજયની મધ્યમાં થઇને પશ્ચિમસમુદ્ર તરફ જતી શીતોદા નામની નદી છે.] १९

[ गाथा ]

कुरुतां कल्पमहीरुह-कुसुम-रजः पटल-पाटलैः सलिलैः ।
नर-नारी-कान्ते तव, मज्जनक-महोत्सवारम्भम् ॥ २०

[ पं. ] प्राप्ते पुनीतामित्यादि, कुरुतां कल्पमहीरुहेत्याद्यनयोरेवं पाठे सति नदी-व्यत्ययः । हैरण्यवतनद्यौ रम्यकक्षेत्रेऽभिहिते, रम्यकनद्यौ च हैरण्यवत इति तस्माद्ये(दे)वं पाठक्रमो द्रष्टव्यः । हे भगवन् ! तव मज्जनकमहोत्सवारम्भं कुरुतां विदधताम् । कैः ? सलिलैः । किम्भूतैः ? कल्पमहीरुहस्य कल्पपादपस्य यानि कुसुमानि तेषां रजस्तस्य पटलं तेन पाटलैरीषद्रक्तैः । के ? रुक्मिपर्वतोपरि-पुण्डरीकह्रदोद्भूता रम्यकमध्येनैन्द्रीदिगापगानाथ-मलङ्कुर्वती नरकान्ताऽऽख्या 'आपगा । तथा नीलनगोपरि केश(स)र्याख्यह्रदात् प्रस्थिता वारुणीदिग्निम्नगा पत्युपकण्ठसेविनी नारीकान्ताऽऽख्या नदी । एते द्वे अपि नर-नारी-कान्ते । 'कान्तशब्दः प्रत्येकमभिसम्बन्धनीयः' इति ॥

(ગૂ. અ.) હે ભગવન્! નરકાંતા અને નારીકાંતા[રુક્મિ-પર્વત ઉપર રહેલા પુંડરીક નામના દ્રહથી ઉત્પન્ન થયેલી, તથા રમ્યકની મધ્યમાં થઇને, પૂર્વદિશાના નદીનાથ(સમુદ્ર)ને અલંકૃત કરનારી નરકાંતા નામની નદી, તથા નીલપર્વત ઉપર રહેલા કેસરી નામના દ્રહથી નીકળેલી, પશ્ચિમદિશાના નદીનાથ(સમુદ્ર)ની સમીપ જતી નારીકાંતા નામની નદી] એ બંને નદીઓ, કલ્પ-વૃક્ષોનાં કુસુમોના રજઃ-સમૂહથી સહજ રક્ત થયેલાં સલિલોવડે તમારા મજ્જન(સ્નાત્ર-અભિષેક)-મહોત્સવનો આરંભ કરો. ૨૦

[ शालिनी ]

प्राप्ते पुनीतां प्रविद्दाटयन्त्यौ, ललाम हैरण्यवतोऽत्रकाश[1]म् ।
लोकैक[2]भर्तुर्भवतोऽभिषेकं, मत्याद्दते रूप्य–सुवर्ण–कूले ॥२१

[ पं. ] प्राप्ते आगते पुनीतां प्रविद्दाटयन्त्यौ विभागेन कुर्वन्त्यौ अपि रूप्य–सुवर्ण–कूले । 'कूलशब्दः प्रत्येकमभि-सम्बध्यते' ॥ [ २१ ॥ ]

(ગૂ. અ.) લોકના અદ્વિતીય સ્વામી એવા આપના અભિષેક પ્રત્યે આદરવાળી રૂપ્યકૂલા અને સુવર્ણકૂલા નામની બે નદીઓ હૈરણ્યવતના તિલકરૂપ શિખરને જૂદાં પાડતી છતી આવી પહોંચી છે; તે બંને પાવન કરો. ૨૧

[ गाथा ]

अर्हदभिषेकपूतं, दूरीकृत–दुःखसम्भवाकूतम् ।
हरतु कलिकाल–कलिलं, रक्ता–रक्तोदयोः सलिलम् ॥२२

---

१ ता. कार्श । २ ता. भर्तुं ।

[ पं. ] सलिलं कलिकाल[स्य] यत् कलिलं पापं, तद् हरतु अपनयतु। किम्भूतम्? अर्हदभिषेकेण पूतं पवित्रम्। दूरीकृतं दुःखसम्भवस्याकूतं चेष्टितं येन तत् तथा। कयोः? शिख[1]रिगिर्युपरिमहापुण्डरीकह्रदाल्लब्धात्मलाभा ऐरावतमध्येन वैताढ्यभेदिनी प्रागाशा-जलधिप्रत्यवगाहिनी रक्तासंज्ञाऽऽपगा। तथा तस्मात्तद्ह्रदाद् विसर्पण्येव, तेनैव तद्भेदिन्येवापरसमुद्रपातिनी रक्तोदाऽभिधाना निम्नगा। एतयो रक्ता-रक्तोदयोः सलिलमिति ॥ [ २२ ॥ ]

(गु. अ.) અર્હતના અભિષેકથી પવિત્ર થયેલું, દુઃખના સંભવની ચેષ્ટાને દૂર કરનારું, રક્તા અને રક્તોદા નામની નદીઓનું સલિલ કલિકાલનાં કશ્મલ(પાપ)ને હરો. ૨૨

[ શિખરગિરિ ઉપર રહેલા મહાપુંડરીક નામના હ્રદથી પોતાની પ્રાપ્તિ(ઉત્પત્તિ) મેળવનારી, ઐરાવતની મધ્યમાં થઈને વૈતાઢ્યને ભેદનારી, પૂર્વદિશાના સમુદ્રનું અવગાહન કરનારી રક્તા નામની નદી, તથા................હ્રદમાંથી વહેતી( પ્રસરતી ) તે જ માર્ગે થઈને, તેને જ ભેદતી, પશ્ચિમસમુદ્રમાં પડતી રક્તોદા નામની નદી જાણવી. ]

[ गाथा ]

अभिषेकवारि हारि, प्रभूतकिञ्जल्क-कल्क-पटवासैः ।
उपनयतु हेमपद्मैः, पद्मा पद्मालया देवी ॥ २३

[ पं. ] साम्प्रतं चतुर्दशनदीकीर्तनानन्तरं पद्मादिमहाह्रदस्था देव्यः श्री-प्रभृतयः संकीर्त्यन्ते।

---

१ ता. शिखगिरियु॑।

पद्मा श्रीः सा अभिषेकवारि हरणशीलं मन-आह्लादित्वात् उपनयतु ढौकयतु । कैः ? हेमपद्मैः सुवर्णपद्मैः । किम्भूतैः ? प्रभूतो यः किंजल्कः पद्मरेणुस्तस्य यः कल्को रसः स एव पटवासः कोष्ठपुटपाकादिर्येषां येषु वा । किंभूता ? पद्मो नाम हिमवत्-कुलपर्व्वतोपरि ह्रदः सद्मालयो निवासो यस्याः सा तथा ॥[२३॥]

(ગૂ. અ.) [૧૪ ચૌદ નદીઓના કીર્તન પછી હવે પદ્મ વગેરે મહાહ્રદોમાં રહેલી શ્રી વગેરે દેવીઓનું સંકીર્તન કરવામાં આવે છે.]

હિમવત્ નામના કુલપર્વતના ઉપર રહેલો પદ્મ નામનો હ્રદ જે જેનું નિવાસ-સ્થાન છે, તે પદ્મા(શ્રી)દેવી, ઘણા પદ્મરજના રસરૂપી પટવાસ(સુગંધી)વાળા હેમપદ્મો સાથે, મનોહર અભિષેક માટે જળ લાવો (સમીપમાં ઉપસ્થિત કરો.) ૨૩

[ गाथा ]

स्नपयन्ती जिनं जात-सम्भ्रमा सम्भ्रमच्छिदम् ।
करोतु पूतमात्मानं, महापद्म-निवासिनी ॥ [१]२४ ॥

[ पं. ] महापद्म-निवासिनी ह्रीसंज्ञा देवी महापद्मो हिमवत्-कुलपर्व्वतोपरि-महाह्रदस्तत्र निवस्तुं शीलं निवासो यस्याः सा तथा। सा आत्मानं पूतं पवित्रं करोतु । किं विदधती ? स्नपयन्ती । कम् ? जिनम् । किंभूता ? जातसम्भ्रमा जातादरा । किंभूतम् ? सम्भ्रमच्छिदं सम्भ्रमो भयं तच्छिनत्तीति सा तथा ॥ [ २४ ॥ ]

१ ता. २५ ।

[ पं. ] केसरिणेव केसरिणा नीलकुलपर्व्वतोपरि ह्रदेन सवा देव्याः कीर्तिसंज्ञायाः भाति शोभते । कः ? भव एव यो द्विपो हस्ती तस्य भङ्गः पराजयः । किम्भूतेन ? स्फुटकेसरेण स्फुटानि केसराणि पद्मकर्णिका–[1]श्लक्ष्णपराणि । अन्यत्र स्कन्धकेशा[2] यस्य स तथा तेन कम्पितानि कमलानि पद्मानि; अन्यत्र मृगा येन स तथा तेन । कस्मिन् सति भव–द्विप–भङ्गः ? जिनाभिषेचने । किम्भूतायाः ? केसरी ह्रदः स आलयो यस्याः सा तथा तस्याः ॥ [ २६ ॥ ]

(ગૂ.અ.) જિનાભિષેકમાં, નીલ નામના કુલપર્વત ઉપર રહેલ કેસરી નામનો હ્રદ જેનું આલય–સ્થાન છે, તે કીર્તિનામની દેવીના સ્ફુટ કેસર (હ્રદના પક્ષમાં પદ્મ–કર્ણિકા અને સિંહના અર્થમાં કેશવાળી–ખભા ઉપરના કેશો)વાળા, કમલો (હ્રદ અર્થમાં પદ્મો અને સિંહના પક્ષમાં હરણો)ને કંપાવનારા એવા કેસરી (હ્રદ અને બીજા પક્ષમાં સિંહ)એ કરેલો ભવ(સંસાર)રૂપી દ્વિપ(હાથી)નો ભંગ(પરાજય) શોભે છે. ૨૬

[ गाथा ]

भाति भवतोऽभिषेके[3], चवणदलिकुल–किङ्किणी–कलापेन ।
रुचिरोज्ज्वलेन जिन ! पौण्डरीकिणी पौण्डरीकेण ॥२७

[ पं. ] हे जिन ! भवतोऽभिषेके पौण्डरी[4] किणी बुद्धि-संज्ञा देवी भाति शोभते । केन ? पौण्डरीकेणेव व्याघ्रेणेव, रुक्मिकुल-

१ ता. स्लक्ष्ण । २ ता. केशा । ३ ता. कक्वमिद । ४ ता. पौंडरि ।

पर्वतोपरि] पौण्डरीकाभिधानेन ह्रदेन। स विशेष्यते- कंवणन्तो येऽलयस्तेषां यानि कुलानि तान्ये(न्ये)व किङ्किणी-कलापः घण्टिका-समूहस्तेन। अन्यत्र कणदलिकुलान्येव किङ्किणी-कलापो यत्र स तथा तेन रुचिरोज्ज्वलेन रुचिरः शोभन उज्ज्वलो दीप्तः ॥[२७॥]

(गू. अ.) हे जिन! आपना अभिषेकमां पौंडरीकिणी बुद्धि नामनी देवी, रुक्मि नामना कुलपर्वत उपर रहेला वाघ जेवा पौंडरीक नामना ह्रदवडे शोभे छे; जे(ह्रद), अवाज करता भमराओना समूहरूपी घुघरीओना समूहवाळो रुचिर(सुशोभित) अने उज्ज्वल (देदीप्यमान) छे. २७.

रिपुसेना-चपेट-कुरङ्ग-संहतिं स्वापतेय-सस्यानाम्।
स्नपयन्ती जगदीशं, जयति महापौण्डरीकस्था ॥ २८

[पं.] जगदीशं जिनं स्नपयन्ती। का? शिखरिकुलपर्वतोपरि महापौण्डरीको ह्रदः महापौण्डरीक इव महाव्याघ्रः, तत्स्था लक्ष्म्य-भिधाना देवी जयति। रिपूणां सेना तया चपेटो वा क्लेशास्त एव कुरङ्ग-संहतिः हरिण-समूहः ताम्। जयति सा। केषाम्? स्वापतेयानि द्रव्याणि तान्येव सस्यानि तेषाम्। एतदुक्तं भवति- या व्याघ्रस्था भवति, सा सस्योपद्रवकारिणीं कुरङ्ग-संहतिं जयति। इयं महा-पुण्डरीकह्रदस्था जिनं स्नपयन्ती स्वापतेयोपद्रवान् रिपुक्लेशान् जयतीति ॥ [२८॥]

(गू. अ.) शिखरी नामना कुलपर्वतना उपर महापौंडरीक नामनो ह्रद छे; जे मोटो वाघ होय तेवो जणाय छे; तेना उपर रहेली लक्ष्मी नामनी देवी, जगदीश(जिन)ने स्नात्र करावती छती, द्रव्योरूपी धान्योनो उपद्रव-विनाश करती शत्रुसेनाओ

विस्तारेला क्लेशोरूपी कुरंगो(हरणो)ना समूह पर जय पामे छे (द्रव्योना उपद्रवोने अने शत्रुओना क्लेशोने दूर करे छे). २८.

[ गाथा ]

कुर्वन्तु तेऽभिषेकं, प्रभास-वरदाम-मागधादीनाम् ।
तीर्थानामधिपतयः, सत्सलिलैः सार-सन्मतयः ॥ २९

[ पं. ] हे भगवन् ! ते तवाभिषेकं कुर्वन्तु । के ? तीर्थानामधिपतयः स्वामिनः । केषाम् ? प्रभास-वरदाम-मागधादीनाम् । प्रभासं भारतस्य पश्चिमसमुद्रे, मागधं पूर्वसमुद्रे, इत्येवमादीनि तीर्थानि गृह्यन्ते, तेषामिति । कैः कुर्वन्तु ? सत्सलिलैः सारा सम्यक् मतिर्येषां ते तथा ॥ [ २९ ॥ ]

( गु. अ. ) हे भगवन् ! सारी श्रेष्ठ मतिने धारण करनारा, प्रभास, वरदाम अने मागध वगेरे तीर्थोना अधिपति(स्वामीओ) सारां श्रेष्ठ पवित्र सलिलो(जळ)वडे तमारो अभिषेक करो.

[ प्रभासतीर्थ, भारतना पश्चिम समुद्र पर अने मागधतीर्थ पूर्व समुद्र पर रहेलुं छे. ] २९.

[ गाथा ]

इति शस्त-समस्त-सरित्-समुद्र-तीर्थोदकानि घोषणया ।
स्मरयन् मागमिषेकं, छेकश्छेकं विधिं कुर्यात् ॥ ३०

[ पं. ] इति परिसमाप्तौ, प्रक्रान्त-प्रकारे वा । शस्तानि प्रशस्तानि, सरित्-समुद्र-तीर्थोदकानि वा । आदिशब्दात् तदधिपत्यादीनि गृह्यन्ते । तेषां या घोषणा, तया स्मरयन् । कम् ?

प्रागभिषेकं पूर्वकृत–जिनाभिषेकम् । छेको दक्षः, छेकं निपुणं, विधिं स्नात्रविधिं कुर्यादिति कर्त्तव्यतोपदेशमिति ॥ [ ३० ॥ ]

इति वादिवेतालीय–पर्व्वणि तृतीयं पर्व्व समाप्तम् ॥ [ ३ ॥ ]

(ગૂ. અ.) એ પ્રમાણે (પ્રકારે) પ્રશસ્ત સમસ્ત નદીઓ, સમુદ્રો અને તીર્થોનાં ઉદક (જળ)ની ઘોષણા વડે, પૂર્વે કરવામાં આવેલ જિનાભિષેકને સ્મરણ કરાવતો દક્ષ (સુજ્ઞ), નિપુણ વિધિ (સ્નાત્ર-વિધિ)ને કરે. ૩૦

[ એ પ્રમાણે વાદિવેતાલીય પર્વમાં ત્રીજું પર્વ સમાપ્ત થયું. ૩ ]

---

[ चतुर्थं पर्व ]

[ गाथा ]

सर्व्वजितः सर्वविदः, सर्व्वगुरोः सर्व्वपूजनीयस्य ।
सर्व्वसुख–सिद्धिहेतोः, न्याय्यं सर्वौषधि–स्नानम् ॥ १

[ पं. ] नद्या[द्या]द्युदकानामनन्तरं सर्वौषध्यादि–स्नात्रमिति तद् दर्शयति सर्व्वजित[१] इत्यादि। सर्व्वसुख–सिद्धिहेतोर्भगवतः सर्वौषधि–स्नानं न्याय्यं न्यायादनपेतं न्यायोपपन्नमिति सम्बन्धः। किंभूतस्य ? सर्व्वजित. सर्व्वमशेषमष्टप्रकारं कर्म्म निर्मूलतो जयतीति सर्व्वजि[त्] तस्य। अत एव सर्व्वविदः सर्वं लोकालोकं वेत्तीति सर्व्ववित् अशेषावरणकर्म्मक्षयात्तस्य। अत एव सर्व्वेषाम् अवदातधियां गुरुस्तस्यात एव सर्वेषामिन्द्रादीनां पूजनीयस्तस्य। किमर्थं तेषां पूजनीयः ? सर्व्वं यत् सुखं सिद्धिश्च तयोर्हेतुः कारणमेव भगवान् वर्त्तते, अतस्तेषां पूजनीयस्तस्येति ॥ [ १ ॥ ]

---

१ ता. जत।

चोथुं पर्व

(गू. अ.) [नदीओ अने ह्रदोना जल-स्नान पछी सर्व औषधिओ वगेरे द्वारा स्नात्र करावाय छे, एथी ते दर्शावे छे-]

सर्व(समस्त-आठ प्रकारना कर्मने निर्मूल करता होई)ने जितनार, सर्व(लोक, अलोक)ने जाणनार, सर्व(विशुद्ध बुद्धिवाळाओ)ना गुरु, सर्व(इन्द्रो वगेरे)ना पूजनीय, सर्व प्रकारनां सुख अने सिद्धिना हेतुरूप एवा भगवानने सर्व औषधिओथी स्नान कराववुं-ए न्यायोचित छे. १.

[ शालिनी ]

स्वामिन्! नित्यं निर्व्यलीकस्य तस्य,
श्रद्धाभाजां पूतिदेहानुषङ्गम्।
जन्मारम्भोच्छेदकृत् सोपयोगो,
योगः स्नात्रे गन्ध-सौगन्धिकैस्तं(स्ते)॥२

[ पं. ] हे स्वामिन्! नित्यं सदा निर्व्यलीकस्य निर्गतं व्यलीकं यस्मात् स तथा, तस्यैवम्भूतस्य ते तव स्नात्रेऽभिषेकोत्सवे। गन्धाश्च सुगन्धिद्रव्यकृताः, सौगन्धिकानि च कुङ्कुम-चन्दनादीनि तैः सार्धं यो योगः सम्बन्धः स सोपयोगः सप्रयोजनः। ननु च निर्व्यलीकस्य किं गन्ध-सौगन्धिकैः? इतीदमाशङ्क्याह- तस्य न क्षिपत्[1]कम्? पूति[:] दुर्गन्धो यो देहस्तेन सार्द्धं योऽनुषङ्गः संबन्धस्तम्। केषाम्? श्रद्धाभाजां प्राणिनामिति। कुतोऽसावेवम्भूत इति। यतो जन्मन उत्पत्तेरारम्भस्तस्योच्छेदो विनाशस्तं करोतीति क्षिपति॥ [२॥]

१ ता. क्षिप्रकं।

(ગૂ. અ.) હે સ્વામિન્! નિત્ય નિર્મલ(નિર્દોષ-નિષ્પાપ એવા) તમારાં સ્નાત્રમાં (અભિષેકોત્સવમાં), (સુગંધિ દ્રવ્યોવડે કરવામાં આવેલા) ગંધો તથા [કુંકુમ, ચંદન વગેરે] સૌગંધિકો સાથે કરાતો યોગ (સંબંધ) સપ્રયોજન (સાર્થક) છે. દુર્ગંધી દેહને બદલે ઉચિત સ્થાને કરાતો તે યોગ, શ્રદ્ધાળુ જનોને જન્મના આરંભનો ઉચ્છેદ કરનાર થાય છે ૨.

[ गाथा ]

स्वच्छतया मुनि-गात्र-पवित्रीभावमुपेत्य जनस्य शिरस्सु ।
मासपदानि [1]जलान्यपि, भूयो भूरिफलानि जयन्ति जगन्ति ॥३

[ पं. ] हे भगवन्! तव मज्जनजलानि भूयो जगन्ति जयन्ति इति सम्बन्धः। किम्भूतानि? स्वच्छतया करणभूतया मुनेर्जिनस्य गात्रम् अङ्गं तेन पवित्रीभावम् अपवित्राणि सन्ति पवित्रत्वमुपेत्य प्राप्य। किम्? प्राप्तं पदं यैस्तानि तथा। क्व? जनस्य शिरस्सु। एतदुक्तं भवति- स्वच्छतया जिन-तनु-सङ्ग-पवित्राणि जनैः शिरसा वन्दितानि। भूयोऽपि पुनरपि जगन्ति जगत्त्रयं जयन्ति अभिभवन्ति। किमिति? यतो भूरिफलानि भूरि स्वर्गापवर्गादि फलं येभ्यो वन्दितेभ्यस्तानि तथा। नहि तथा भूरिफलकर्तृत्वं जगत्सु अस्ति, अतो जगज्जयस्तेषामिति ॥ [ ३ ॥ ]

(ગૂ. અ.) હે ભગવન્! સ્વચ્છતાવડે, મુનિ(જિન)નાં ગાત્ર-વડે પવિત્રભાવને પ્રાપ્ત કરીને, ફરી પાછાં લોકોનાં મસ્તકો ઉપર સ્થાન પ્રાપ્ત કરનારાં જળ પણ વંદન કરનારાઓને સ્વર્ગ, મોક્ષ વગેરે ફળ આપનારાં થઈ ત્રણે જગતને જિતનાર થાય છે. ૩.

[ गाथा ]

कथय कथं प्रशमनिधेरन्तरलब्धावकाश-विवशोऽपि ।
बहिराविरस्ति रागः[1], कुङ्कुम[2]पङ्कच्छलाद् भवतः[3] ॥ [ ४ ॥ ]

[ पं. ] हे भगवन् ! कथय प्रतिपादय । यद्यप्यामन्त्रणपदं नोपात्तं तत् तथापि सामर्थ्यादवसीयते । कथमयं रागो माया-लोभ-संज्ञितो रक्ताख्यो गुणः । कुङ्कुम-पङ्कच्छलात् कुङ्कुमपङ्क-व्याजेन भवतस्तव बहिराविर्भवति । किम्भूतः सन् ? अन्तर्मध्ये अलब्धो योऽवकाश[4] आश्रयस्तेन विवशो विह्वलः स कथमेवम्भूतो बहिराविरस्तीत्येतत् कथय । किम्भूतस्य ? प्रशमनिधेः प्रशमनिधानस्य भवत इति ॥ [ ४ ॥ ]

( गू. अ. ) હે ભગવન્ ! આપ કહો કે શું પ્રશમનિધિ એવા આપના અંતરમાં અવકાશ ન મળવાથી વિવશ થયેલો રાગ (માયા-લોભ-સંજ્ઞાવાળો, બીજા પક્ષમાં લાલાશ) કુંકુમના પંકના બહાનાથી બહાર પ્રગટ થયેલો છે ? ૪.

[ गाथा ]

भवति लघोरपि महिमा, महति यतः कुङ्कुमद्रवः सहसा ।
हरिचन्दनानुकारं, बिभर्ति भवतोऽङ्ग-सङ्गत्या ॥ ५

[ पं. ] हे भगवन् ! लघोरप्यल्पस्यापि महिमा महत्त्वं भवति । क ? महति महद्विषये महापुरुषसमाश्रयण इत्यर्थः । कुतः ? एतदेव गतमित्याह यतः कारणात् कुङ्कुमद्रवो रसः सहसा

१ ता. रागं । २ ता. पाङ्क । ३ ता. भवता । ४ ता. काश ।

तल्लक्ष्णं हरिचन्दनस्यानुकारमाकृतिं बिभर्ति धारयति । मत्रतत्त्र अङ्ग-सङ्गत्या अङ्ग-सङ्गमेन । एतदुक्तं भवति भगवदङ्ग-सङ्गमेन कुङ्कुममेवम्भूतां श्रियं धारयति, येन भव्येषु हरिचन्दनमित्येवं बुद्धिरुत्पद्यत इति ॥ [ ५ ॥ ]

( ગૂ. અ. ) હે ભગવન્ ! મહાપુરુષના આશ્રયથી લઘુનો પણ મહિમા થાય છે; કારણ કે-આપના અંગની સંગતિથી કુંકુમરસ જલ્દી હરિચંદનના આકારને ધારણ કરે છે. [કુંકુમ એવા પ્રકારની શોભાને ધારણ કરે છે, કે જેથી ભવ્યોમાં 'આ હરિચંદન છે' એવા પ્રકારની બુદ્ધિ ઉત્પન્ન થાય છે.] ૫.

[ गाथा ]

कुङ्कुमहृद्यां द्यामिव, सन्ध्या-शरदभ्रविभ्रमभ्राजम् ।
चन्दनचर्चा'ऽभ्यर्चामर्चा'मर्चयन्ति ते कृतिनः ॥ ६

[ पं. ] हे भगवन् ! ते तव अर्चां प्रतिमाम् अर्चयन्ति पूजयन्ति कृतिनः पण्डिताः कृतं येषामस्ति ते तथा । किंभूताम् ? कुङ्कुमेन हृद्यां हृदयाह्लादिनीम् । सोल्लेक्ष्यते[३]- द्यामिव नभमिव । किंभूतां द्याम् ? शर[४]दभ्रं शरदभ्रं तस्य विभ्रमो विलासः तेन भ्राजते इति क्विप् । अतस्ताम् । किंभूताम् अर्चाम् ?. चन्दनस्य ये चर्चा [५]स्तबककान्तैरभ्यर्चा पूजा यस्याः सा तथा ताम् । एतदुक्तं भवति- सन्ध्याऽभ्राणि कानिचित् रक्तानि, शरदि च स्वाभाव्यात् कानिचित् शुभ्राणि, अतस्तत्तुल्या द्यौः कुंकुमलिप्तायाः चन्दनस्तबकार्चितायाः जिनार्चायाः सदृशीति ॥ [ ६ ॥ ] .

१ ता. दम्य । २ ता. मन्दिति । ३ ता. क्षते । ४ ता. द्याभ्र । ५ ता. वर्त्ता ।

(ગુ. અ ) હે ભગવન્ ! કુંકુમવડે હૃદયને આહ્લાદ કરનારી, તથા ચંદનની ચર્ચા( સ્તબકો-ટપકાં )થી પૂજાયેલી એવી તમારી પ્રતિમા, જાણે 'સંધ્યાસમયનાં શરદ્‌ઋતુનાં વાદળાંવાળું' આકાશ હોય તેવી જણાય છે, તેને કૃતિજનો( પંડિતો-સુજ્ઞો ) પૂજે છે.

[ સંધ્યા-સમયનાં વાદળાં કેટલાંક લાલરંગવાળાં હોય છે, અને શરદ્‌ઋતુમાં સ્વાભાવિક રીતે કેટલાંક સફેદ( ધોળાં ) હોય છે; આથી તેથી યુક્ત આકાશને કુંકુમથી વિલેપન કરાયેલી અને ચંદનનાં સ્તબકો( તિલકો )થી પૂજાયેલી જિન-પ્રતિમા સરખું જણાવ્યું છે. ] ૬.

उपनयतु [1]भगवंस्ते शान्तमत्यन्तकान्तं,
सर[स]सुरभिगन्ध-लीढलीनद्विरेफम् ।
सकलभुवनबन्धो[2]र्बन्ध-विध्वंसहेतोः,
मृगमद-मदपट्टोद्भासि वक्त्रारविन्दम् ॥ ७

[ पं. ] हे भगवन् ! सकलभुवनबन्धोर्भवतः वक्त्रारविन्दं मुखपद्मं संसारोच्छेदम् उपनयतु आनयत(तु) ' भव्यानाम् ' इति शेषः । किंभूतम् ? शान्तं राग-द्वेषानुपलब्धि-हप्यभावात्, अत्यन्त-कान्तं नितान्त-कमनीयमत्यन्तरूपातिशयात् । सरसो यः सुरभि-गन्धः स आलीढः आस्वादितो यैस्ते तथा सरस[3]- सुरभिगन्धा-लीढा लीना द्विरेफा यस्मिन् वक्त्रारविन्दे यत् तथा । बन्धस्य अष्टप्रकारकर्म-निगडस्य विध्वंसो विनाशस्तस्य हेतुः कारणम् । हेतुशब्दः स्वलिङ्ग एव स्थित.[4] । अथवा सकलभुवनबन्धोरिति

१ ता. भगवांस्तं । २ ता. बंधो । ३ ता. सरसि । ४ ता. तो ।

विशेषणं पद्मस्यमेतत् । मृगस्य मदः कस्तूरिका, तेन मदपट्टो मण्डन-विशेषः, तेनोद्भासितुं शीलं यस्य स तम् तथा ॥ [७॥]

( ગુ. અ. ) હે ભગવન્ ! સકલ ભુવનના બંધુ એવા આપનું, [કર્મ-]બંધના વિનાશના હેતુભૂત એવું મુખારવિંદ(મુખ-કમળ), જે રાગ-દ્વેષ સાથે સંબંધ ધરાવતી દૃષ્ટિથી રહિત હોવાથી શાંત છે, રૂપના અતિશયથી અત્યંત કાંત છે, જેના સરસ સુરભિ ગંધના આસ્વાદ માટે ભમરાઓ જ્યાં લીન થયા છે, તથા જે, કસ્તૂરીના મંડન(અલંકાર)વડે દેદીપ્યમાન છે, તે ભવ્યોના સંસારનો(ભવ-ભ્રમણનો) ઉચ્છેદ કરો. ૭

[ गाथा ]

भाति भवतो ललाटे, राका-चन्द्रार्ध-विभ्रमो भ[ग]वन् ! ।
भासलयो मलयोद्भव-सिद्धार्थक-रोचना - तिलकः ॥ ८

[ पं. ] भगवन् ! भवतो मलयोद्भवं चन्दनं, सिद्धार्थकाः प्रतीताः, रोचना गोरोचनास्तामिस्तिलको भाति । किंभूतः ? भास-लयः भासनिलयः । क्व ? ललाटे । किंभूते ? राका पौर्णमासी, तस्यां चन्द्र[ः], तस्यार्धम्, तस्येव विभ्रमः आकारो यस्य तत् तथा तस्मिन्निति ॥ [ ८ ॥ ]

[ ગુ. અ. ] હે ભગવન ! પૂર્ણિમાના ચંદ્રના અર્ધભાગનો વિભ્રમ કરાવતા આપના લલાટ પર સ્થાન પામેલ ચંદન, શ્વેતસર્ષપ અને ગોરોચના દ્વારા કરવામાં આવેલું તિલક શોભે છે. ૮

तवेश ! निग्रन्थगणाग्रगामिनो,
　　न युज्यतेऽपास्तरतेरलङ्कृतिः ।
तथापि तस्यां कृतिनः कृतादरा-
　　स्तरन्ति भव्या भव-दुःख-सागरम् ॥ ९

[पं.] हे ईश ! तव न युज्यते अलंकृतिरलङ्कारः । किम्भूतस्य ? नि[1]ष्किञ्चनानां गणास्तेषाम् अग्रगामिनः नि[1]ष्किञ्चनतमस्येत्यर्थः । अपास्तरतेः अपास्ता रतिविशेषसुखेच्छा येन स तथा तस्य । यद्यप्येवं, तथापि तस्यामलङ्कृतौ कृतादराः कृतिनः पण्डिताः । के ? भव्या मुक्तिगमनयोग्या भव-दुःख-सागरं संसार-दुःख[2]-समुद्रं तरन्तीति । एतदुक्तं भवति- भवतः कृतकृत्यस्य सर्वज्ञतागुणालंकृतस्य सकलजगदेक[3]विभूषणस्य, न मानुषोचितैरलंकारैरुपमप्यलंकर्तव्यमस्ति इति, किन्तु अलंकारकर्तुरेव तथाभूतालङ्कारदर्शनोत्पन्न-विशिष्टतरपरिणामात् मोक्षावाप्तिरतोऽलङ्काराद्याश्रितमिति ॥ [ ९ ॥ ]

( गू. अ. ) हे ईश ! हे स्वामिन् ! निर्ग्रन्थो(निष्किंचनो)ना गणोना अग्रेसर ( अत्यंत निष्किंचन एवा ), तथा रागने जेणे दूर कर्यो छे एवा तमने अलंकार योग्य लागता नथी ( घटता नथी ), तो पण अलंकार पर आदर करनारा भव्य सुज्ञो संसार-संबंधी दुःख-सागरने तरी जाय छे.

कहेवानो आशय ए छे के-कृतकृत्य, तथा सर्वज्ञता-गुणथी अलंकृत अने सकळ जगतना अद्वितीय विभूषणरूप एवा आपने,

---

१ ता. निःकिं । २ ता. दुःखं । ३ ता. देव- ।

[ गाथा ]

तिष्ठतु तावदलङ्कृतिरभिषेको गन्ध-धूप-माल्यादि ।
भवनमपि नाथ ! मा भून्नु भवनं त्यक्तसङ्गस्य ॥ ११

[ पं. ] अथवा किमनेन ? तिष्ठतु भवतु तावदलङ्कृतिरलङ्कारः। एतच्च तिष्ठतु, अभिषेकः स्नानम्, गन्धाश्च धूपश्च माल्यानि च कुसुमानि च तानि आदिर्यस्य विलेपनादेस्तत् तथा। हे नाथ ! भवनमपि गृहमपि मा भून्न बभूव न प्राप्तं नोचितमित्यर्थः। नन्वित्यसूयायाम् । भवतस्तव । किंभूतस्य ? त्यक्तसङ्गस्य निरस्तसंबन्धस्य । एवं हि परमार्थेन त्यक्तसङ्गो भवति । यदि भवनमपि न भवतीति भावना ॥ [ ११ ॥ ]

( ગુ. અ. ) અથવા હે નાથ ! આથી શું ? અલંકાર તો રહો, સંગ(સંબંધ) ત્યાગ કરનાર એવા આપને અભિષેક(સ્નાન), ગંધ, ધૂપ અને પુષ્પ વગેરે ઘટે નહિ, તેમ જ આપને ભવન(ગૃહ-મંદિર) પણ ઉચિત નં ગણાય. ૧૧.

[ गाथा ]

तद् यदि कृतानुकारं, श्रद्धाऽतिशय विशिष्टविनियोगम् ।
आगममविसंवादं, निरपायमहाफलोपलम्भाभ्युदयम् ॥ १२

भवतः पूर्व्वावस्थामास्थाय गुरोर्गुरूपदेशं च ।
कुर्व्वन्त्यभिषेकादीन्, मद्वेषः को विभूषायाम् ? ॥ १३

१ ता. पलो । २ ता. प्रदोषा ।

[ पं. ] तदिति वाक्योरन्यामार्थः। तद् यदि भवतात्र पूर्वापरायां गृहस्थावस्थामास्थाय कल्पयित्वा अभिषेकादीन् कुर्वन्ति। आदिग्रहणाद् भवन-गीत-वादित्रादीनां ग्रहणम्। गुरोः संबन्धिनं गुरुदयामौ उपदेशश्च सं चास्थाय हृदि व्यवस्थाप्य अभिषेकादीन् निर्शङ्काः कुर्वन्ति; ततस्तेषां सर्वत्रानिरूपितप्रज्ञानाम् अर्द्धजरतीन्यायानुसारिणां विभूषायां कः प्रद्वेषः? इति संबन्धः। किंभूतम्? गुरोर्गुरूपदेशमभ्याचेति स विशिष्यते- 'कृतस्येन्द्रादिभिरनुकारोऽनुकरणमिति एवंभूतो य उपदेशः, अथवा करण-क्रियाविशेषणम्, कृतस्यानुकारो यस्मिन् करण इति। यतोऽर्हत्यस्य विनियोगो वस्तु-[वि]नियोगः विशिष्टो देवपूजाऽऽदि-निमित्तो वस्तु-नियोगो यस्मिन्, उपदेशकरणे वा आगममागमभूतमुपदेशम् आगमे वा भवं करणमिति। न विद्यते अपायः विसंवादः पुण्यानुबन्धित्वेन यस्येति निरपायं यन्महाफलं तस्य च उपलम्भः प्राप्तिस्त्वाभ्युदयो यस्मिन् उपदेशे करणे चेति॥ [ १२-१३॥ ]

( गु. अ. ) જો, તે આપની પૂર્વ અવસ્થા(ગૃહસ્થ-અવસ્થા)ને કલ્પીને ઇંદ્રો વગેરેએ કરેલ, તેના અનુકરણરૂપે, તથા આગમ સાથે વિસંવાદ ન કરનાર, પુણ્યાનુબંધિ નિર્વિઘ્ન મહાફલની પ્રાપ્તિ, અભ્યુદય કરનાર હોઇ, ધર્માતિશય-પૂર્વક વિશિષ્ટ વિનિયોગ કરવામાં આવે છે. ગુરુના ઉપદેશને અનુસરીને અભિષેક(ભવન, ગીત-વાદિત્ર વગેરે)ને વિના સંકોચે કરે છે, તો પછી સર્વ સ્થળે પ્રજ્ઞા-પૂર્વક ન નિરૂપણ કરનાર એવા તેઓને 'અર્ધજરતીન્યાય'ને અનુસરનારાઓને વિભૂષામાં દ્વેષ શા માટે? ૧૨-૧૩.

[ गाथा ]

जिन-भवन-बिम्ब-पूजा-यात्रा-स्नात्रादि-विभ्रमे भङ्गम् ।
मिथ्याप्ररूपणाकृत् कुर्यादपवर्गमार्गस्य ॥ १४

[ पं. ] भवनं च बिम्बं च पूजा च स्नात्रादि चेति द्वन्द्वः । जिनस्येमे ते तथा तेषां विभ्रमोऽन्यथाप्रतिपादनं तस्मिन् सति । अपवर्गमार्गस्य मोक्षपथस्य भङ्गं विनाशं कुर्यात् । कः ? मिथ्याप्ररूपणाकृत् विपरीतं प्ररूपयन् ॥ [ १४ ॥ ]

( ગૂ. અ. ) જિન-ભવન, જિન-બિંબ, જિન-પૂજા, જિન-યાત્રા અને જિન-સ્નાત્ર વગેરે સંબંધમાં વિભ્રમ કરવામાં(અન્યથા પ્રતિપાદન કરવામાં) તેવી મિથ્યા પ્રરૂપણા કરનાર; મોક્ષ-માર્ગનો ભંગ કરે-વિનાશ કરનાર થાય છે. ૧૪.

[ गाथा ]

अभिषेकादि-महोत्सवमुपलभ्य परेऽपि परमदेवस्य ।
परिपृच्छ्य कुतूहलिनो, जायन्ते गुणविशेषविदः ॥ १५

[ पं. ] परेऽपि मिथ्यादृष्टयोऽपि अभिषेकादि-महोत्सवमुपलभ्य । कस्य ? परमदेवार्हतः गुणविशेषविदो जायन्ते इति संबन्धः । किंभूताः ? कुतूहलिनः [1]सन्तः परिपृच्छ्याचार्यादीन् तत्-कथनानन्तरं गुणविशेषविदो जायन्ते । अपरतीर्थाधिपा[2]सम्भविनं भगवति गुणविशेषं विदन्तीत्यर्थः ॥ [ १५ ॥ ]

---

१ ता. संतिः । २ ता. पाअ ।

(ગૂ. અ.) બીજા મિથ્યાદૃષ્ટિઓ પણ અભિષેક [illegible] મહોત્સવને પ્રાપ્ત કરીને, કુતૂહલવાળા (જિજ્ઞાસુ) થઈ [illegible] આચાર્યો વગેરેને પૂછીને, તેમના કથન પછી, પરમેશ્વર-અર્હંતના ગુણ-વિશેષોને જાણનારા થાય છે–[બીજા દીર્ઘદર્શિ (દેવો)માં અસંભવિત એવા ભગવંતમાં રહેલ ગુણ-વિશેષને જાણે છે.] ૧૫.

[ गाथा ]

चैत्यालयेन केचित्, केचिद् बिम्बादपास्तरागादेः।
केचित् पूजातिशयाद्, बुध्यन्ते केचिदुपदेशात् ॥ १६

[ पं. ] चैत्यालयेन भगवदर्हदायतन-दर्शनेन [illegible] सम्यग्दर्शनावरणाद् बुध्यन्ते। केचित् तु बिम्बाद् [illegible] लक्षणोपेतातिशयरूपात्, 'ल्यब्लोपे वा पञ्चमी' [illegible] त्यर्थः। कस्य ? अपास्ताः क्षिप्ता रागादयो येन [illegible] इत्यर्थः। केचित् तु भगवतः कटक-केयूर[illegible]-कुसुमादि-कृतात् पूजातिशयाद् हेतोः, [illegible]। केचित् प्रतिदिनमाचार्यादिकृतात् जीवादि[illegible]काचतुर्गतिकसंसारभयोत्पादनतः प्रतिक्षणं [illegible] दुपदेशाद्; 'बुध्यन्ते' इति सर्वत्र [illegible] यथा-विभवं भगवतः पूर्व(र्ण)पूजा[illegible] विधेयमिति ॥ [ १६ ॥ ]

(ગૂ. અ.) કેટલાક આત્માઓ [illegible] આયતનનાં દર્શનવડે) સમ્યગ્દર્શ[illegible] છે; કેટલાક આત્માઓ, રાગ વગેરે [illegible] સમસ્ત લક્ષણોથી યુક્ત, અતિશય [illegible]

